राजा—

अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन संभावितः।
अशोक यदि सद्य एव कुसुमैर्न संपत्स्यसे
वृथा वहसि दोहलं ललितकामिसाधारणम् ॥ १७ ॥

सखे वचनावसरपूर्वकं प्रवेष्टुमिच्छामि।

विदू०—एहि। णं परिहासइस्सं। (क)

(उभौ प्रवेशं कुरुतः।)

निपु०—भट्टिणि भट्टा एत्थ पविसादि। (ख)

इरा०—एव्व मम पुढमं चिन्तिदं हिअएण। (ग)

विदू०—(उपसृत्य) होदि जुत्तं णाम अत्तहोदो पिअवअस्सो अअं असोओ वामपादेण ताडेदु। (घ)

---

(क) एहि। एना परिहासयिष्यामि।

(ख) भट्टिनि भर्तात्र प्रविशति।

(ग) एवं मम प्रथमं चिन्तितं हृदयेन।

(घ) भवति युक्त नामात्रभवतः प्रियवयस्योऽयमशोको वामपादेन ताडयितु।

---

चरणार्पणयोस्तुल्यरूपपरिवर्तेन वञ्चितं अकृतार्थं मन्ये ॥ यस्ते चरणसत्कारं लब्धा (लब्ध्वा) ॥ अनेनेत्यादि। ललितकामिसाधारणं चारु॰

---

(१) B. G. N. T. मुकुलै. (२) B. G. I. मुधा. (३) B. G. T. °अवसार°, N. °अनुसर°. (४) A. माल्विआए for मम. (५) B. G N. T. उपेत्य. (६) N. om. &. A, P add ण. (७) B. G. N. T. A. om. अअ. (८) N. °असोओ। ण &c.

उभे—( ससंभ्रमम् । ) अह्मो भट्टा । ( क )

विदू०—वउलावलिए गहीदत्थाए तुए अत्तहोदी ईरिसं अविणअं करन्दी कीस ण णिवारिदो । ( ख )

( मालविका भयं रूपयति[1] )

निपु०—भट्टिणि देक्ख[3] । किं पउत्त[4] अज्जगोदमेण । ( ग )

इरा०—कहं[5] बह्मबन्धु अण्णहा जीविस्सदो[6] । ( घ )

बकु०—अज्ज एसा देवीए णिओअं अणुचिट्ठदि । एदस्सिं अदिक्कमे परवदी इअं । पसीदतु भट्टा । ( आत्मना समसेनां प्रणिपातयति । ) ( च )

राजा—यद्येवमनपराद्धासि । उत्तिष्ठ भद्रे । ( इति हस्तेन गृहीत्वो[8]त्थापयति । )

---

( क ) अहो भर्ता ।

( ख ) बकुलावलिके गृहीतार्थया त्वयात्रभवतीदृशमविनयं कुर्वती कस्मान्न निवारिता ।

( ग ) भट्टिनि पश्य किं प्रयुक्तमार्यगौतमेन ।

( घ ) कथं ब्रह्मबन्धुरन्यथा जीविष्यति ।

( च ) आर्य एषा देव्या नियोगमनुतिष्ठति । एतस्मिन्नतिक्रमे परवतीयम् । प्रसीदतु भर्ता ।

---

कामिसाधारणं चारुकाभिनतुल्यं दोहदं पादनिक्षेपरूपं वृथा मिथ्या वहसि ॥ 'जुत्तणाम' इत्यत्र काकुरनुसधेया ॥ भयं रूपयतीति । अत्र भयकथना

---

( १ ) P. A. वारित. ( २ ) P. A. निरूपयति. ( ३ ) B. G. N. T. पेक्ख. ( ४ ) Pn om. ( ५ ) B G. N T. P. पउत्त ( प्रवृत्तं ). ( ६ ) B. G. N. P. add क्खु, Pn. A. add स. ( ७ ) N. होदि. ( ८ ) B. G. N. T. ( इत्यात्मना सहैना &c ). ( ९ ) N. add एना.

**विदू०**—जुज्जइ । देवी एत्थ माणइदव्वा । ( क )

**राजा**—

किसलयमृदोर्विलासिनि कठिने निहितस्य पादपस्कन्धे।
चरणस्य न ते बाधा संप्रति वामोरु वामस्य ॥ १८ ॥

( मालविका लज्जां नाटयति )

**इरा०**—अहो णवणीदहिअओ अज्जउत्तो । ( ख )

**माल०**—बउलावलिए एहि । अणुछिदं अत्तणो णिओअं देवीए णिवेदेम । ( ग )

**बकु०**—तेणेहि विण्णवेहि भट्टारं विसज्जेहि त्ति । ( घ )

**राजा**—भद्रे यास्यसि । मम तावदुत्पन्नावसरमर्थित्वं श्रूयताम् ।

**बकु०**—अवहिदा सुणाहि । आणवेदु भट्टा । ( च )

---

( क ) युज्यते । देव्यत्र मानयितव्या ।

( ख ) अहो नवनीतहृदय आर्यपुत्र ।

( ग ) बकुलावलिके एहि । अनुष्ठितमात्मनो नियोगं देव्यै निवेदयाव॥

( घ ) विज्ञापय भर्तारं विसर्जयेति ।

( च ) अवहिता शृणु । आज्ञापयतु भर्ता ।

---

त्संभ्रमेण नाम संध्यङ्गमुक्तं भवति ॥ किसलयेत्यादि । स्पष्टोऽर्थः ॥ अत्र प्रियोक्त्या संगृहो नाम संध्यङ्गमुक्तं भवति ॥ अहो आविनीतहृदयोऽयमार्यपुत्र,

---

( १ ) P. A. लज्जते, N, रूपयति. ( २ ) P add सासूयम् ( ३ ) B. G N. T Po णवणीदकम्प° ( ४ ) A. add एव, ( ५ ) B, G, N. T om; Po. A, om हि.

राजा—

धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात्प्रभृति ।

स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥ १९ ॥

इरा०—( सहसोपसृत्य । ) पूरेहि पूरेहि । ण' असोओ कुसुमं दसेदि । अअ उण पुप्फइ फलइ अ । ( क )

( सर्वे इरावतीं दृष्ट्वा सम्भ्रान्ताः । )

राजा—( अपवार्य । ) वयस्य का प्रतिपत्तिरत्र ।

विदू०—किं अण्ण । जङ्घावल एव्वं । ( ख )

---

( क ) पूरय पूरय । नन्वशोकः कुसुमं दर्शयति । अयं पुनः पुष्यति फलति च ।

( ख ) किमन्यत् । जङ्घाबलमेव ।

---

( दयार्द्रचित्तत्वात्तपस्व्योत्प्रेक्षा । सेन्दुद्वनोक्तिरियं ) । धृतिपुष्पेति ( अयं मादृशः जनः चिरात्प्रभृति धृतिपुष्पं धृतेः पुष्प न बध्नाति । अतोऽनन्य रुचेरनन्याभिलापस्यास्य मादृशस्य जनस्य दोहद अभीष्ट स्पर्शामृतेन पूरय । पूरय पूरय । अशोकः कुसुमं न दर्शयति ( अशोकः पुष्प दर्शयति । ) अयं पुनः पुष्यति फलति च ( न विकाशते किन्तु फलति फलिष्य तीत्यर्थः ) । अत्र संरब्धवचनात्तोटक नाम सध्यङ्गमुक्त भवति । वयस्ये-त्यादि । का प्रतिपत्तिः को विचार- । क उपाय इत्यर्थः । अत्र भीतेर्गम्य-मानत्वादुद्वेगो नाम सध्यङ्गमुक्त भवति । मया आत्मनो वञ्चना वचन प्रमाणीकृत्य व्याघगीतरक्तया हरिण्येवाशङ्कितया न विज्ञातमेतत् । एतदित्यनेन राज्ञा कपटाचरण परामृश्यते ॥ प्रतियोजयेदानीं किमपि ।

---

( १ ) B. G N. T. असोओ कुसुम ■ दसेदि. ( २ ) Po A. अअ उण ण केवल पुप्फइ फलइ अ, N. अअ उण पुप्फदि एव्व, B. G. T. अअ उण प्रतिभिदो एव्व, ( T. add ण पुप्फइ फलइ जेव ). ( ३ ) T. add ( सरण ).

इरा०—बउलवलिए साहु उवक्कन्तम् । मालविए तो दाणिं तुमं अज्जउत्तं सफलपथ्यणं करेहि । ( क )

उभे—पसीददु भट्टिणी । का अह्मे भत्तुणो पणअपडिग्गहस्स । ( इति निष्क्रान्ते । ) ( ख )

इरा०—अविस्ससणीआ पुरिसा । मए क्खु अत्तणो वञ्चणावअणं पमाणीकरिअ वाहगीदरत्ताए हरिणीए विअ असंकिदाए एदं ण विण्णादं । ( ग )

---

( क ) बकुलावलिके त्वया साधूपक्रान्तम् । मालविके तावदिनानीं त्वं आर्यपुत्रं सफलप्रार्थनं कुरु ।

( ख ) प्रसीदतु भट्टिनी । के आवां भर्तुः प्रणयपरिग्रहस्य ।

( ग ) अविश्वसनीयाः पुरुषाः । मया खल्वात्मनो वञ्चनावचनं प्रमाणीकृत्य व्याधगीतरक्तया हरिण्येवाशङ्कितयैतन्न विज्ञातम् ।

---

कर्मगृहीतेन कर्मणि चौर्यकर्मणि गृहीतेनापि कुम्भीरकेन चोरेण संधिच्छेदने । संधेः पिहितभूमिः संधिस्तस्य छेदेने भेदने । सुरङ्गकरणं इत्यर्थः । शिक्षितः । अभ्यसितोऽस्मीति वक्तव्यं भवति । किमपि प्रतियोजय ॥ उपपन्न

---

( १ ) B. G. T. add साहु. ( २ ) P. A. B. G. N. T. add [illegible]. ( ३ ) B. G. N. T. om. मालविए ता तुमं; A. P. दाव for दाणिं; B. G. दाणिं करेहि अज्जउत्तं सफलपत्थणं. ( ४ ) Po. पसंगस्स ( प्रसंगस्य ). ( ५ ) P. A. om. इति. ( ६ ) P. A. add अहो. ( ७ ) B. G. N. T. om. ( ८ ) N. add अस्सिचाए वाहजणगीदगहीदचित्ताए विअ हरिणीए एदं ण विण्णादं; B. G. T अस्सिवाए पिअधारिणीए हिअअसड्ढं किदं । एव्व ण विण्णादं मए वाहजणगीदगहीदचित्ताए अविसविकदाए हरिणीए विअ विणासो त्ति । ( ९ ) N. वाहजणगीदगहीदचित्ताए; Pn. om. जण, ( १० ) N. om.

**विदू०**—( जनान्तिकम् । ) पंडिओजेदि दाणिं किंपि । कम्मगहीदेणं कुम्भीलएण संधिच्छेअणसिक्खिदओ ह्मि त्ति वत्तव्वं होदि । ( क )

**राजा**—सुन्दरि न मे मालविकायां कश्चिदर्थः । मया त्वं चिरायमाणेति कथंचिदात्मा विनोदितः ।

**इरा०**—विस्ससणीओ सि । मए ण विण्णादं ईरिसं विणोदवत्थुअं अज्जउत्तेण उवलद्धं त्ति । अण्णहा मन्दभाइणीए एव्वं ण करीअदि । ( ख )

**विदू०**—मा दाव अत्तहोदी अत्तहोदो दक्खिण्णस्स उअरोहं भणादु । सैमावत्तिदिट्ठेण देवीए परिअणेणं सकहा वि जइ अवराहो दावीअदि एत्थ तुम एव्व पमाणं ( ग )

---

( क ) प्रतिभोजयेदानीं किमपि । कर्मगृहीतेन कुम्भीलकेन संधिच्छेदनशिक्षकोऽस्मीति वक्तव्यं भवति ।

( ख ) विश्वसनीयोऽसि । मया न विज्ञातमीदृशं विनोदवस्तुकमार्यपुत्रेणोपलब्धमिति ।.अन्यथा मन्दभगिन्यैव न क्रियते ।

( ग ) मा तावदत्रभवत्यत्रभवतो दाक्षिण्यस्योपरोधं भणतु । समापत्तिदृष्टेन देव्याः परिजनेन सकथापि यद्यपराधः स्थाप्यतेऽत्र त्वमेव प्रमाणम् ।

---

मनुपपन्नं वा उत्तरं कुर्वित्यर्थः । विश्वसनीयोऽसीत्यत्र विपरितलक्षणानुसंधे-

---

( १ ) B. G. T. भो पडिवज्जेहि किंपि उत्तरं. ( २ ) N. add वि, B. G. T. किं ण भणइ । उदन्तान्तमूले विमहिले विमहिदेण ( उदन्तान्तमूले विपथिके विमथितेन ) कुम्भलिण्ण ( B. G. संवेसो रक्खिदव्वो त्ति ) ( T. सन्धिच्छेदो सिक्खिदव्वोत्ति ). ( ३ ) Po. A. add एत्थ. N. °छेअ &c. ( ४ ) B. G. N. T. मालविआ ( ५ ) B. G. N. T. add पद्मा°. ( ६ ) B. G. T. अविस्स°, ( ७ ) B. किं वि, P. A. एतारिस. ( ८ ) N. दुस्सरभं°, B. G. T. दुक्खन्नावारिणी एव्व ण ररेमि, Po A. दुक्खतर एव्व. ( Po एव्व ) ण ररेमि. ( ९ ) N. तावदा. ( १० ) N. तत्तमअदो. ( ११ ) B. G. मविदु, N. भणिदु ( १२ ) B. [illegible]. T, समीवदिट्ठेण. ( १३ ) B. G. परिहिथअजणेण, T. परिअरिसियआजणेण ( १४ ) Po. अवराहे, A. अवराहो, T. वारिअदि, B. G. सरदा अहिमूआ ( B. अवराहो )

इरा०—ण सकदा णाम होदु ! किति' अत्ताणं आआसइस्सं । (इति रुष्टा प्रस्थिता) ( क )

राजा—( अनुसरन् । ) प्रसीदतु भवती ।

( इरावती रशनासदितचरणा व्रजत्येव । )

राजा—सुन्दरि न शोभते प्रणयिजनेनिरपेक्षता ।

इरा०—सठ अविस्ससणीअहिअओ सि । ( ख )

राजा— शठ इति मयि तावदस्तु ते
परिचयवत्यवधीरणा प्रिये ।
चरणपतितया न चण्डि तां
विसृजसि मेखलयापि याचिता ॥ २० ॥

इरा०—इअं पि हदासा तुमं एव्व अणुसरादि । ( रशनामादाय राजानं ताडयितुमिच्छति । ) ( ग )

---

( क ) ननु सकथा नाम भवतु । किमित्यात्मानमायासयिष्यामि ।

( ख ) शठ अविश्वसनीयहृदयोऽसि ।

( ग ) इयमपि हताशा त्वामेवानुसरति ।

---

या ॥ मा तावदत्रभवतो दाक्षिण्यस्योपरोधं भणतु । शठइत्यादि । हे प्रिये परिचयवति परिचयः संस्तवो यस्य स परिचयवान् । अतिशायने मतुप् । तस्मिन्मयि शठ इति गूढविप्रियकारीति अवधीरणा तिरस्कारोऽस्तु । अत ' अतिपरिचयादवज्ञा ' इति वदन्ति । तस्मादियमवधीरणा युक्तैवेत्यर्थः । हे चण्डि अत्यन्तकोपने चरणपतितया मेखलया रशनया याचि

---

(१) वेज्जिअ वाल्ड. (२) N. ह्या. A. P. om. इति. (३) N. सदति, B. G T सदान्ति. (४) P. A प्रणयजननिरपेक्षता, N. प्रणयिनि जने &c. (५) Po A. चण्डता, N. चण्डिता

राजा—एषा

वाष्पासारा हेमकाञ्चीगुणेन
श्रोणीबिम्बादभ्युपेक्षाच्च्युतेन ।
चण्डी चण्डं हन्तुमभ्युद्यता मां
विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥ २१ ॥

इरा०—किं मं एव्व भूओ वि अवरद्धं करेसि । (इति सरशनं हस्तमालम्बते ।) (क)

राजा—

अपराधिनि मयि दण्डं संहरसि किमुद्यतं कुटिलकेशि ।
वर्धयसि विलसितं त्वं दासजनायात्र कुप्यसि च ॥२२॥

नूनमिदानीमभ्यनुज्ञातम् । (इति पादयोः पतति ।)

(क) किं मामेव भूयोऽप्यपराद्धां करोषि ।

तापि प्रार्थितापि तामवधीरणां न विसृजसि न त्यजसि । किमिदं युक्तमिति शेषः (सर्वोपाचनेन कोपत्यागस्योचितत्वेन कोपाभावे चावधीरणात्यागो युक्त एव । तन्नकरोषीत्यनुचितमिति भावः) । वाष्पासारेत्यादि । वाष्प आसार इव यस्याः । श्रोणीबिम्बात् प्रशस्तनितम्बस्थानादुपेक्षया असावधानेन च्युतेन गलितेन विद्युद्दाम्ना विद्युन्मालयेव हेमकाञ्चीगुणेन स्वर्णरशनया चण्डमुग्रं (यथास्यात्तथा) मेघराजीव मेघमालेव इयं चण्डी कोपना विन्ध्य पर्वतमिव मां हन्तुमुद्यता उद्युक्ता) । किं मामेवं भूयोऽप्यपराद्धां करोषि । अपराधिनीत्यादि । स्पष्टोऽर्थः ॥ नूनमित्यादि । इदं त्वद्रशनासंहरणमनुज्ञात

(१) B. G. स्रोतस्वती, T. वपस्वीरानवी; N. ह्यामिरानवी, A. पैशा. (२) B. G. N. T. अभ्युपेक्षा &c. (३) N. °ताह. (४) P. A. om. (५) B. G. T. अवधारिअ, A. अवरुद्ध (अपरोध) (६) B. G. N. T. read (सरशन हस्तमवलम्बयति) after राजा below. (७) N. अद्य. (८) P. add (आत्मगतम्). (९) N. इदम्.

इरा०—ण खु इमे मालविआएं चलणा जे दे हरिसंदोहलं पूरयिस्संति । ( इति निष्क्रान्ता सचेटी । ) ( क )

विदू०—भो उट्ठेहि उट्ठेहि । किदप्पसादोसि । ( ख )

राजा—( उत्थाय इरावतीमपश्यन् । ) कथं गतैव प्रिया ।

विदू०—वअस्स दिट्ठिआ इमस्स अविणअस्स अप्पसादिदा गदा । तं वअं सिग्घं अवक्कमाम जाव अङ्गारओ रासिं विअ सा अणुवक्कं ण करेइ । (ग)

राजा—अहो मनसिजवैषम्यम् ।

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।
एवं हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता ॥ २३ ॥

( इति निष्क्रान्तः सह वयस्येन । )

## इति तृतीयोऽङ्कः ।

---

( क ) न खल्विमौ मालविकायाश्चरणौ यौ ते हर्षदोहदं पूरयिष्यतः ।

( ख ) भो उत्तिष्ठ उत्तिष्ठ । कृतप्रसादोऽसि ।

( ग ) वयस्य दिष्ट्या अस्याविनयस्याप्रसादिता गता । तदावां शीघ्रमपक्रमाव यावदङ्गारको राशिमिव सा अनुवक्रं न करोति ।

---

मनुमतम् । मत्प्रार्थनया इति शेषः ॥ वयस्य दिष्ट्या अनेनाविनयेनाप्रसन्ना गतैषा । तावदावां शीघ्रमेवापक्रमाव यावदङ्गारको राशिमिवानुवक्रं (प्रतिगमनं) प्रतीपं [illegible] करोति । मन्ये इत्यादि । प्रियाहृतमना मालविकाहृतमना

---

( १ ) N मालविआचलणा. ( २ ) Po परिस, Pn फरिस; A हरिस T. विसेसेण ( ३ ) P A ( ससखी निष्क्रान्ता । ), N सहचेट्या ( ४ ) B G. N. T. om. भो & om. उट्ठेहि ( ५ ) B. G T अदिद &c ( ६ ) B. G हत, T वत् ( ७ ) P A om. ( ८ ) N अप्पसण्णा, B G T अप्पसादिदा ( ९ ) N. add एसा ( १० ) B G अत्तिणा, T. अहदाव for वा वअ. ( ११ ) B G. N T om. ( १२ ) N. add पडिगमणं. ( १३ ) N. T मदनस्य; B. G. मदन° ( १४ ) B. G T एव प्रणयवती [illegible] नहि शक्यम &c ( १५ ) P A. ( इति परिक्रम्य निष्क्रान्तौ सर्वे ) B. G. T. ( इति निष्क्रान्ताः सर्वे ).

प्रणिपातलङ्घन प्रणामातिक्रम तस्या इरावत्या सेवामनुकूलाचरण मन्ये। **सेवायाः फलमाह**—कुपिता क्रुद्धा प्रणयवती प्रेमवता सा इरावती एव मनेन क्रमेण प्रणिपातलङ्घनरूपेणोपेक्षितुमौदासीन्येन वर्तितु शक्य हि शक्या खलु। शक्यमिति निपात (तदतिक्रामिणों प्रसादनविशेष प्रणामाधिकामिति यावत् सेवा मन्ये तादृशी सेवैव प्रसादनाया अल नान्येत्यर्थ। सा हि कुपितापि मयि प्रणयवती अत उपेक्षितु तस्या प्रसादनमिति शेष न शक्यम्।) अत्र बीजानुसधानादाक्षेपो नाम सध्यङ्गमुक्त भवति। इद

श्रीकाटयवेमभू

: . . योऽङ्क ॥

( )

चतुर्थोऽङ्कः

( ततः प्रविशति पर्युत्सुको राजा प्रतीहारी च । )

राजा—( आत्मगतम् )

तामाश्रित्य श्रुतिपथगतामास्थया लब्धमूलः
संप्राप्तायां नयनविषयं रूढरागः प्रवालः ।
हस्तस्पर्शैर्मुकुलित इव व्यक्तरोमोद्गमत्वा-
त्कुर्यात्क्लान्तं मनसिजतरुर्मां रसज्ञं फलस्य ॥ १ ॥

( प्रकाशम् । ) सखे गौतम ।

प्रती०—जेदु भट्टा । असण्णिहिदो गोदमो । ( क )

राजा—( आत्मगतम् । ) अये मालविकावृत्तान्तज्ञानार्थं प्रेषितः ।

( प्रविश्य )

विदू०—वड्ढदु भवं । ( ख )

---

( क ) जयतु भर्ता । असंनिहितो गौतमः ।

( ख ) वर्धताम् भवान् ।

---

कविरिदानीमिष्टा तस्मारभते—ततः प्रविशतीत्यादिना । तामिति । मुकुलित इव सजातमुकुल इव कान्तं कामनायुक्तं कुर्यादिति प्रार्थनाया ( आशसाया ) लिङ् । अत्र प्रशंसितं वान प्रकारस्याने कृतमिति मन्तव्यम् ॥ असंनिहितोऽत्र गौतम ॥ सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्ड

---

(१) B G N T वद्धमूल (२) B G N T स्पर्श. (३) B G T कुसुमित (४) P रोमोद्गत (५) N T. क्लान्त. (६) B G. N T repeat जेदु (७) B G N T. आ (८) N. T add मया (९) B G add विदूषक (१०) B. G. T जेदु जेदु and P A. जेदु.

**राजा**—जयसेने जानीहि कथं देवी धारिणी कय वाँ सरुजचरण त्वाद्विनोद्यत इति ।

**प्रती०**—ज देवो आणवेदि । ( इति निष्क्रान्ता । ) ( क )

**राजा**—सखे को वृत्तान्तस्ते सख्यास्तत्रभवत्यां ।

**विदू०**—जो बिडालगहीदाए परहुदिआए । ( ख )

**राजा**—( सविषादम् । ) कथमिव ।

**विदू०**—सा खु तवस्सिणी ताए पिङ्गलच्छिए सारभण्डभूघरए मिच्चुमुहे विअ णिक्खित्ता । ( ग )

**राजा**—ननु मत्संपर्कमुपलभ्य ।

**विदू०**—अह इ । ( घ )

---

( क ) यदेव आज्ञापयति ।

( ख ) यो बिडालगृहीतायाः परभृतिकायाः ।

( ग ) सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डभूगृहे मृत्युमुख इव निक्षिप्ता ।

( घ ) अथ किम् ।

---

भूगृहे गुहायामिव निक्षिप्ता । शृणोतु भवान् । परिव्राजिकया मे कथितम् । ह्य पूर्वेद्यु. किल तत्रभवतारावती रुजाक्रान्तचरणा देवीं सुखपृच्छिका आगता ॥ तयोक्तम् ( ततस्तया व्याख्यात । मदो वा उपचारो वा ।.प त्तव परिजनस्य वल्लभत्व जानत्यपि पृच्छयति ) । मन्दो व उपचार ।

---

( १ ) N. add तावत्, B. G तावत् । क था देवी कय वा &c, and T. तावत् । कासौ &c ( २ ) B. G. N. T. om कय वा. ( ३ ) B. G. N. T गौतम ( ४ ) B. G. N. T. तत्रभव यास्तेतल्या ( ५ ) A Po °भाण्डभूमि° and B. G. T °भाण्डगेहमुहे परिक्खित्ता. ( ७ ) B. मे, ( मत्सकाशमुपलभ्य ).

**राजा**—गौतम क एवं विमुखोऽस्माकं येन चण्डी कृता देवी ।

**विदू॰**—सुणादु भवं । परिव्वाजिआ मे कहेइ । हिओ किल तत्त होदी इरावदी रुजाविहत्थचलणं देविं सुहंपुच्छिआ आअदा । ( क )

**राजा**—ततस्ततः ।

**विदू॰**—तदो सा देवीए पुच्छिदा । किं णं लक्खिदो जणो वल्लहो त्ति । ताए उत्तं । मदो वा उवआरो वा जं दे परिअणस्स वल्लहत्तणं जाणन्ती वि पुच्छसी त्ति । ( ख )

**राजा**—निर्भेदादृतेऽपि मालविकायामयमुपन्यासः शङ्कयति ।

---

( क ) शृणोतु भवान् । परिव्राजिका मे कथयति । ह्यः किल तत्रभवतीरावती रुजाविहस्तचरणां देवीं सुखपृच्छिकागता ।

( ख ) ततः सा देव्या पृष्टा । किं न लक्षितो जनो वल्लभ इति । तयोक्तम् । मदो वा उपचारो वा यत्परिजनस्य वल्लभत्वं जानन्त्यपि पृच्छसीति ।

---

यत्परिजने संक्रान्तं वल्लभत्वं न ज्ञायते ॥ निर्भेदादृतेऽपि स्फुटीकरणं विनापि ॥ ततस्तयानुबध्यमानया भवतोऽविनयमन्तरेण परिगृहीतार्था कृता । ( धारिणी ) राजाविनयमिरावत्याः सकाशाज्ज्ञातवतीत्यर्थः ॥ किमतःपरम् ।

---

( १ ) B. G. N. T. om. ( २ ) N. परिव्वाजिआए मे कहिद. ( ३ ) N. रुअकत° and B. G. T. रुआअन्त° ( रुजायमान ). ( ४ ) B. G. T. Po. सुह पुच्छिदु. ( ५ ) P. omits this speech and reads the following speech of विदूषक in continuation with the above. ( ६ ) B. G. T. किं अत्तणो वि अणलक्खिदो हिअअजणो वल्लहो त्ति । &. N. किं णु ओलोइदो वल्लहजणोत्ति. ( ७ ) Po A. मदो वो उवआरो । ज दे परिअणस्स वल्लहत्तण त ण जाणसि त्ति । N. मदो.. ज परिअणे सक्कंत वल्लहत्तणं ■ जाणीअदि, and B. G. T. तदो ताए उत्तम्मतीए मतिद्म. मुदो वा उवआरो जं परिअणे सक्कंत वल्लहत्तणं जाणिस्सदि त्ति ।. ( ८ ) Pn. add मो & T. अहो. ( ९ ) B. G. T. om. अपि.

विदू०—तदो तए अणुबन्धिज्जमाणाएँ भवदो अविणअं अन्तरेण परिगहीदत्थो किदा देवी। (क)

राजा—अहो दीर्घरोषता तत्रभवत्याः। अतः परं कथय।

विदू०—अदोवरं किं। मालविआ बउलावलिआ अ णिअलवदीओ अदिट्ठसुज्जपादं पादालवास णाअकण्णआ विअ अणुहोन्ति। (ख)

राजा—कष्टम्।

मधुरस्वेरा परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ।
कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते ॥ २ ॥

वयस्य अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात्।

विदू०—कहं भविस्सदि। जं सारभाण्डघरएँ वाउदा माहविआ देवीए संदिट्ठा। मम अङ्गुलीअमुद्दं अदेक्खिअ ण मोत्तव्वा तुए हदासा मालविआ बउलावलिआ अ त्ति। (ग)

---

(क) ततस्तयानुबध्यमानया भवतोऽविनयमन्तरेण परिगृहीतार्था कृता देवी।

(ख) अतः परं किम्। मालविका बकुलावलिका च निगलवत्याबद्धसूर्यपादं पातालवासं नागकन्यके इवानुभवतः।

(ग) कथं भविष्यति। यत्सारभाण्डगृहे व्यापृता माधविका देव्या संदिष्टा। ममाङ्गुलीयकमुद्रामदृष्ट्वा न मोक्तव्या त्वया हताशा मालविका बकुलावलिका चेति।

---

मधुस्वरेत्यादि। (मधुरस्वरा मधुरनादा परभृता कोकिला भ्रमरी च तत्तु-

---

(१) Po. णिअवि &c and N. अणुसिज्जमाणा सा (२) B. G. T. परिगद. (३) N. किं अदो पर, and B. G. T. किं अवरं. (४) B. G. N. repeat. (५) P. मधुररसा परभृतिका; मधुरस्वरा परभृति. (६) B. G. N. T. om., P. वयस्याप्यत्रोपक्रमस्य कस्यचित् &c. (७) B. G. °भाडग्गावारिद, and T. भाडगिहम्मावारिद. (८) N. अगुलीअअ &c. B. G. °मुद्दअ and T. मुद्दिअ. (९) Po. om.

राजा—( निःश्वस्य ) सखे किमत्र प्रतिकर्तव्यम्।

विदू॰—( विचिन्त्य । ) अत्थि एत्थ उवाओ । ( क )

राजा—क इव ।

विदू॰—( सदृष्टिक्षेपम् । ) को वि अदिट्ठो सुणादि । कण्णे दे कहेमि । ( [3] उपश्लिष्य कर्णे[4] । ) एव्व विअ । ( इत्यावेदयति । ) ( ख )

राजा—( सहर्षम् [5] ) सुष्ठु चिन्तितम् । [7] प्रयुज्यतां सिद्धये ।

( प्रविश्य )

प्रती॰—देव पवादसअणे देवी णिसण्णा रत्तचन्दणधारिणी परिअणहत्थगहीदेणं चलणेण भअवदीएँ कहाहिं[10] विणोदिअमाणा चिट्ठइ । ( ग )

राजा—[11] अस्मत्प्रवेशयोग्योऽयमवसरः ।

( क ) अस्त्यत्रोपायः ।

( ख ) कोऽप्यदृष्टः शृणोति । कर्णे ते कथयामि । एवमिव ।

( ग ) देव प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगृहीतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति ।

ल्ये मालविकाबकुलावलिके इत्यर्थात् विबुद्धचूतसङ्गिन्यौ विकासितसहकारसक्ते मदाश्रिते इतिध्वनिः प्रबलपुरोवातया वृष्ट्या कोटर वृक्षकोटर त

( १ ) B. G. N. T. add सपरामर्शम् . ( २ ) B. G. N. T. om. प्रति. ( ३ ) N. add इति. ( ४ ) B. G. T. om. कर्णे ( ५ ) A. P om. ( ६ ) N. om चिन्तितम्. ( ७ ) B. G. T. add ( B. G. अनुष्ठित & T. अनुष्ठेयम् ) ( ८ ) B. G. T. °धारिणा. ( ९ ) B. G. N. T. हत्थगदेण. ( १० ) P. A. पडिव्वाजिआए. ( ११ ) B. G. T. Interchange. ( १२ ) B. G. T. add तस्मात् and N. तेनहि. ( १३ ) B. G. T. °प्रयाण°.

विदू०—तां गच्छदु भव । अह वि देविं पेक्खिदु अरित्तपाणी भविस्सं । ( क )

राजा—जयसेनायारतात्सवेद्य गच्छै ।

विदू०—( कर्णे । ) होदि एव्वं विअ । ( इत्यावेद्य निष्क्रान्त । ) ( ख )

राजा—जयसेने प्रवातशयनमार्गमादेशय ।

प्रती०—इदो इदो देवो । ( ग )

( तत. प्रविशति शयनस्या देवी परिव्राजिका विभवतश्च परिवार )

देवी—भअवदि रमणिज्ज [2] कहावत्थु । तदो तदो । ( घ )

परि०—( सदृष्टिक्षेपम् । ) देवि अत पर पुन कथयिष्यामि । अत्र भवानीश्वर सप्राप्त ।

देवी—अहो अज्जउत्तो [5] । ( इत्युत्थातुमिच्छति । ) ( च )

---

( क ) तद्गच्छतु भवान् । अहमपि देवीं द्रष्टुमरिक्तपाणिर्भविष्यामि ।

( ख ) भवति एवमिव ।

( ग ) इत इतो देव ।

( घ ) भगवति रमणीय कथावस्तु । ततस्तत. ।

( च ) अहो आर्यपुत्रः ।

---

तुल्य निबिडान्धकार इति ध्वनि । गमिते प्रापिते ) । अत्र राज्ञः कर्णे विदूषकोक्त उपायो नियमेन मालविकाप्राप्तिहेतुत्वान्नियताप्तिर्नाम चतुर्थी

---

( १ ) B. G. T. भो ( २ ) A. सवाध, B. G. T. सन्निहित & N. अस्मद्दृष्टस्य विदित कुरु ( ३ ) B G. N. T. तह । ( कर्णे ) एव्व विअ होदि. ( ४ ) A. P. अदिरमणिज्ज. ( ५ ) T. अत्रभवान् विदिशेश्वर and N. अत्र भगवान् विदिशेश्वर . ( ६ ) B. G. N. T. मह्य. ( ७ ) B. C. अपि for इति.

**राजा**—अलमलमुपचारयन्त्रणया ।

**अनुचितनूपुरविरहं नार्हसि तपनीयपीठकालम्बि ।**

**चरणं रुजा परीतं कलभाषिणि मां च पीडयितुम् ॥ ३ ॥**

**परि०**—विजयता देवः । [1]

**धारिणी**—जेदु अज्जउत्तो । [2] ( क )

**राजा**—( परिव्राजिकां प्रणम्योपविश्य [3] । ) देवि अपि सह्या वेदना ।

**धारिणी**—[4]अत्थि मे[5] विसेसो । ( ख )

( ततः प्रविशति यज्ञोपवीतबद्धाङ्गुष्ठः सम्भ्रान्तो विदूषकः । )

**विदू०**—परित्ताअदु परित्ताअदु भव । सप्पेणं दट्ठोह्मि । ( ग )

( सर्वे विषण्णाः । )

**राजा**—कष्टम् [8] । क्व भवान्परिभ्रान्तः ।

---

( क ) जयत्वार्यपुत्रः ।

( ख ) अस्ति मे विशेष. ।

( ग ) परित्रायता परित्रायता भवान् । सर्पेण दष्टोऽस्मि ।

---

वस्या सूचिता । अत्र पूर्वं प्रकरिस्थानोक्तबीजस्यानया नियताप्त्या समन्वयादवमर्शोनाम चतुर्थसंधि. प्रतिपादित इति मन्तव्यम् ॥ परिजनहस्तग तेन चरणेन । अहो भर्ता ॥ अनुचितेति ( अनुचितनूपुरविरह सतत परिचितनूपुरसंगमित्यर्थः । रुजा परीत रोगव्याप्त चरण तदर्शनेन रोगाक्रान्त मा च पीडयितुं नार्हसि ) । अद्यास्ति मे विशेषः ॥ तत इति ।

---

( १ ) B. G. N. T. परिव्रा°. ( २ ) B G. N. T. Interchange the speeches. ( ३ ) B. G. T. add च. ( ४ ) Pn. add. तै. ( ५ ) N. add अज्ज ( ६ ) P. add दाणि. ( ७ ) Po. A. अविहा सप्पेण सदट्ठोह्मि, and B. G. T. सप्पेणह्मि दट्ठो. ( ८ ) B. G. N. T. repeat.

विदू०—देविं देक्खिस्सं त्ति आआरपुप्फग्गहणकालणादो पमदवणं गदोह्मि ।[1] ( क )

देवी—हद्धी हद्धी[2] । अहं एव्व बह्मणस्स जीविदसंसआणिमित्तं जादा । ( ख )

विदू०—तहिं असोअत्थवअस्स[3] कालणादो मएँ पसारिदे दक्खिणहत्थे[4] कोडरणिग्गदेण कालेणँ सप्परूविणीँ दट्ठोह्मि । णं एदाइं दुवे दंतपदाइ । ( इति दशं दर्शयति । ) ( ग )

परि०—तेन हि दंशच्छेदः पूर्वकर्मेति श्रूयते । स तावदस्य क्रियताम्[12] ।

[13]छेदो दंशस्य दाहो वा क्षतेर्वारक्तमोक्षणम् ।
एतानि दष्टमात्राणामायुष्यैः प्रतिपत्तयः ॥ ४ ॥

---

( क ) देवीं द्रक्ष्यामीत्याचारपुष्पग्रहणकारणात्प्रमदवनं गतोऽस्मि ।

( ख ) हा धिक् हा धिक् । अहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जाता ।

( ग ) तस्मिन्नशोकस्तबकस्य कारणान्मया प्रसारिते दक्षिणहस्ते, कोटरनिर्गतेन कालेन सर्परूपिणा दष्टोऽस्मि । नन्वेते द्वे दन्तपदे ।

---

यज्ञोपवीतेन बद्धोऽङ्गुष्ठो यस्य स तथोक्तः । अत्र कपटकल्पनाया गम्यमानत्वाच्छलनं नाम संध्यङ्गमुक्तं भवति ॥ तस्मिन्नशोकस्तबककारणात्प्रसारिते दक्षिणहस्ते कोटरनिर्गतेन सर्परूपेण कालेन दष्टोऽस्मि । छेदो दंशस्ये-

---

( १ ) दक्खिदुदि. ( २ ) B. G. T. om गाहण. ( ३ ) P. add परित्ता अड्ड परित्ताअदु. ( ४ ) A. om. ( ५ ) Po सस्स &c. N. आगहि and B. G. T. जादा बह्मणस्स. ( ६ ) B. G. T. असोअत्थपुप्फत्ताल°, and N. त्थवअरा°. ( ७ ) N. om. ( ८ ) B. G. T. पसारिदो दक्खिणहत्थो । तदो &c. (९) P अग्गहत्थे, A. हत्थे. (१०) B. G. T. Interchange. N. सप्परूवेण कालेण. ( ११ ) B. G. N. T. ण एदाणि दुवे दसणपदाणि ( B. G. om. दसण ). ( १२ ) B. G. T. om तेन... क्रियताम्. ( १३ ) A. reads the verse and the following and P only the following first in the king's speech below. (१४) N. मोचनम्. ( १५ ) P. आयुष..

संप्रति विषवैद्यानां कर्म।

**राजा**—जयसेने क्षिप्रमानीयतां ध्रुवसिद्धिः[1]।

**प्रती०**—जं देवो आणवेदि। ( इति निष्क्रान्ता। ) ( क )

**विदू०**—अहो पावेण मिचुणा गहीदोह्मि ( ख )

**राजा**—मा कातरो भूः। अविषो[2]ऽपि कदाचिद्दंशो भवेत्।

**विदू०**—कहं ण भाइस्सं[3]। सिमासिमाअन्ति मे अङ्गाइं। ( [4]विषवेग रूपयति। ) ( ग )

**देवी**—[5]ही ही आहिअं दंसिदं विआरेण। हला अवलम्भइ णं। (घ)

( परिजनः[6] ससंभ्रममवलम्बते )

**विदू०**—( राजानं विलोक्य। ) भोः भवदो बालत्तणादो पिअवअस्सो ह्मि। तं विआरिअ अपुत्ताए मे जणणीए जोअक्खेमं वहेहि। ( च )

---

( क ) यदेव आज्ञापयति।

( ख ) अहो पापेन मृत्युना गृहीतोऽस्मि।

( ग ) कथं न भेष्यामि। सिमिसिमायन्ति मेऽङ्गानि।

( घ ) ही ही आधिक्यं दर्शितं विकारेण। हला अवलम्बध्वमेनम्।

( च ) भोः भवतो बाल्यात् प्रियवयस्योऽस्मि। तं विचार्यापुत्राया मे जनन्या योगक्षेमं वह।

---

इत्यादि। ध्रुवसिद्धिरिति तस्य वैद्यस्य नाम॥ अनेन संतापः सूच्यते।

---

( १ ) B. G. N. T. Interchanges. ( २ ) P. om. अपि. (३) A. interprets भाइस्स by भविष्यामि. (४) B. G. N. T. add इति. ( ५ ) B. G. T. हा हा दंसिद विआरेण। अवलंबध ण। ( T. घलण for ण ) N. हा दसिद असुह विआरेण ( दर्शितमशुभ विकारेण अवलम्बध बह्मण and P. हीही असुह दंसिद ( असुभ हट &c. ) .. अवलम्बह ण. (६) N. T. परिनाजिका & B. G. पारिपार्श्विका. ( ७ ) B. G. T. भो बालप्पिअवअस्सोह्मि दे (T. तुए) । अविआरेण ( अविकारेण ) अपुत्ताए जणणीए &c। N. भो बह्मणोपि &c. ( ८ ) A. मुच्छाए and Po मुच्छाए मे.

**राजा**—मा भैषी.[१] । अचिरात्वा वैयाधिकित्सते । [२]स्थिरो भव ।

( प्रविश्य )

**जय०**—देव आणविदो[३] धुवसिद्धि विण्णवेदि । इह [४]एव्व आणीअदु गोदमो त्ति । ( क )

**राजा**—तेन हि वर्षधरप्रतिगृहीतमेन तत्रभवतः सकाशं प्रापय ।

**जय०**—तह । ( ख )

**विदू०**—( देवीं विलोक्य । ) भोदि जिवेअं वा ण वा । जं[७] मए अत्तभवन्तं सेवमाणेण दे अवरद्धं तं मरिसेहि । ( ग )

**देवी**—दीहाऊ होहि । ( घ )

( निष्क्रान्तौ[८] विदूषकः प्रतीहारी च । )

**राजा**—प्रकृतिभीरुस्तपस्वी । [९]धुवसिद्धेरपि यथार्थनाम्नः सिद्धिं न मन्यते ।

---

( क ) देव आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति । इहैवानीयतां गौतम इति ।

( ख ) तथा ।

( ग ) भवति जीवेय वा न वा । यन्मयात्रभवन्तं सेवमानेन तेऽपराद्धं तन्मृष्यस्व ।

( घ ) दीर्घायुर्भव ।

---

विषवेगं निषप्राप्तिं रूपयति प्रकाशयति । विषावेगास्तु वसन्तराजीये कथिताः—

---

( १ ) N. add गौतम. and take स्थिरोभव here after it. ( २ ) N. T. चिकित्सप्यति and B. G. चिकित्सयिष्यति. ( ३ ) A. P. प्रतिहारी all through. ( ४ ) A. P. om. ( ५ ) N. add सो. ( ६ ) P. वर्षवर धरि० & N. om. वर्षवर. ( ७ ) Po add व सव्व. ( ८ ) N. निष्क्रान्तौ. ( ९ ) Pn. A. धुव- सिद्धि मध्ये. N. धुवसिद्धिमपि यथार्थ नामान सिद्धिमन न मन्यते.

**जय॰**[1]—जेदु भट्टा। भुवसिद्धी विण्णवेदि। उदकुम्भविहाणेण सप्प मुद्दिअ किंपि कप्पइदव्व। त अण्णेसीअदु त्ति। ( क )

**देवी**—इद सप्पमुद्दिअं अङ्गुलीअअ । पच्छा मम हत्थे देहि ण ( ख )

( इति प्रयच्छति। )[2]

**राजा**—जयसेने[3] कर्मसिद्धावाशु प्रतिपत्तिमानय।

**प्रती॰**—ज देवो आणवेदि। ( इति निष्क्रान्ता। ) ( ग )

**परि॰**—यथा मे[4] हृदयमाचष्टे तथा निर्विषो गौतमः।

**राजा**—भूयादेवम्।

( प्रविश्य )

**जय॰**—जेदु[5] भट्टो[6]। णिवुत्तविसवेगो गोदमो मुहुत्तेणं[7] पकिदित्थो सवुत्तो। ( घ )

---

( क ) जयतु भर्ता। भुवसिद्धिर्विज्ञापयति । उदकुम्भविधानेन सर्प मुद्रित किमपि कल्पयितव्यम्। तदन्विष्यतामिति।

( ख ) इद सर्पमुद्रितमङ्गुलीयकम्। पश्चान्मम हस्ते देह्येतत्।

( ग ) यदेव आज्ञापयति।

( घ ) जयतु भर्ता। निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थ सवृत्तः।

---

' वैवर्ण्यं वेपथुर्दाह. फेन. स्कदस्य भञ्जनम्। दु ख जाड्य मृतिश्चेति वि षवेगा. स्युरष्टधा॥' यन्मया तत्रभवन्त सेवमानेन अपराद्ध तन्मृष्यताम्

---

( १ ) B. G N. T. Po विहाणे। सप्पमुद्दिअ कपिअण्णेमाअदु।. (२) B. G. T. om. & N. इति अगुलायक ददाति and add प्रतिहारा गृहीत्वा प्रस्थिता. ( ३ ) N. om. ( ४ ) B. G. T. om. मे ( ५ ) B. G. T. repeat. ( ६ ) N. देवो ( ७ ) Po. णिवुत्त. गोत्तमो। मुहुत्तएण पकिदित्थ एव्व सवुत्तो. Po. A. णिवुत्त... गोत्तमो पकिदित्थएव्व &c.

देवी—दिट्ठिआ वैअणाआदो मुत्तह्मि ( क )

प्रती०—एसो उण अमच्चो वाहतओ णिण्णवेदि । राअकज्जं बहु मन्तिदव्वं । तं दंसणेण अणुग्गहं इच्छामि त्ति । ( ख )

देवी—गच्छदु अज्जउत्तो कज्जसिद्धीए । ( ग )

राजा—आतपाक्रान्तोऽयमुद्देशः । शीतक्रिया चास्या रुजः प्रशस्ता । तदन्यत्र नीयतां शयनीयम् ।

देवी—बालिओ अज्जउत्तवअणं अणुचिट्ठह । ( घ )

परिजनः—तहा । ( च )

( इति निष्क्रान्ता देवी परिव्राजिका परिजनश्च । )

राजा—जयसेने गूढेन पथा मां प्रमदवनं प्रापय ।

प्रती०—इदो इदो देवो । ( छ )

राजा—जयसेने समाप्तकृत्यो ननु गौतमः ।

---

( क ) दिष्ट्या वचनीयान्मुक्तास्मि ।

( ख ) एष पुनरमात्यो वाहतको विज्ञापयति । राजकार्यं बहु मन्त्रयितव्यम् । दर्शनेनानुग्रहमिच्छामीति ।

( ग ) गच्छत्वार्यपुत्रः कार्यसिद्धये ।

( घ ) बालिका आर्यपुत्रवचनमनुतिष्ठत ।

( च ) तथा ।

( छ ) इत इतो देवः ।

---

इति ॥ दर्शितमशुभं विकारेण । अवलम्ब्यं ब्राह्मणम् ॥ विवृत्तविषवेगो .

---

( १ ) N. om. ( २ ) B G. N. T. om. ( ३ ) B. G. om. च.
( ४ ) N. G. शयनम्. ( ५ ) B. G. T पालिआ, N. बालिआओ and A. बालिशा. ( ६ ) अज्जउत्तस्स सदेस. (७) add ( परिजनस्तथा प्रकरोति: ).
( ८ ) N. om. इति ( ९ ) Pn. गुढपथेन. A. B. G. T. Po om. मां.
( १० ) B. G. T. °कार्यो & N. करणीयो.

प्रती०—अह इ । ( क )

राजा—

इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा ।
संदिग्धमेव सिद्धौ कातरमाशङ्कते चेतः ॥ ५ ॥

( प्रविश्य )

विदू०—वड्ढदु भवं । सिद्धाइं दे मङ्गलकज्जाइं । ( ख )

राजा—जयसेने त्वमपि नियोगमशून्यं कुरु ।

प्रती०—जं देवो आणवेदि । ( इति निष्क्रान्ता । ) ( ग )

राजा—वयस्य क्षुद्रा माधविका । न खलु किंचिद्विचारितमनया ।

विदू०—देवाए अङ्गुलीअअमुद्दं देक्खिअ कहं विआरीअदि । (घ)

राजा—न खलु मुद्रामधिकृत्य ब्रवीमि । एतयोर्बद्धयो किं निमित्तोऽयं मोक्ष । किं देव्या परिजनमतिक्रम्य भवान्सदिष्ट इत्येवमनया प्रष्टव्यम् ।

विदू०—ण पुच्छिदोह्मि । पुणो मन्दस्सवि मे तस्सिं पच्चुप्पण्णा मदी । ( च )

---

( क ) अथ किम् ।

( ख ) वर्धतां भवान् । सिद्धानि ते मङ्गलकार्याणि ।

( ग ) यद्देव आज्ञापयति ।

( घ ) देव्या अङ्गुलीयकमुद्रां दृष्ट्वा कथं विचार्यते ।

( च ) ननु पृष्टोऽस्मि । पुनर्मन्दस्यापि मे तस्मिं प्रत्युत्पन्ना मति ।

---

गौतमो मुहूर्तमात्रेण प्रकृतिस्थ संवृत्त ॥ इष्टाधिगमेत्यादि । ( इष्टस्या

---

( १ ) N हृदयम् ( २ ) P A. वड्ढदु & B G. T repeat. ( ३ ) B G T °कज्जाइ ( मम कज्जाइ ) ( ४ ) B G N T गौतम ( ५ ) B. G N T. मुद्दिअं ( ६ ) B G. । तयोर्द्वयो & N स्तयोर्द्वयो ( ७ ) B G N T om. अयं. ( ८ ) B G N T किंवा ( ९ ) B G T मन्दस्सावि पुणो मे वह पच्चुप्पण्ण उत्तरं आसि, P. पच्चुप्पण्णबुद्धिणा मए कहिदं A पच्चुत्तरपच्चुप्पण्णबुद्धिणा मए कहिदं.

राजा—कथ्यताम् ।

विदू०—भणिदो मए । देव्वचिन्तएहिं णिण्णाविदो राआ । सोवसग्गं वो णक्खत्तं । सव्वबन्धणमोक्खो करीअदु त्ति । ( क )

राजा—ततस्ततः ।

विदू०—तं सुणिअ देवीए इरावदीचित्तं रक्खन्तीए राआ किल मोएदित्ति अहं संदिट्ठो त्ति । तदो मुच्चइदे त्ति तीए सपादिदो अत्थो । (ख)

राजा—( विदूषकं परिष्वज्य । ) सखे प्रियोऽहं तव ।

> नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
> कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥ ६ ॥

( क ) भणिता मया । दैवचिन्तकैर्विज्ञापितो राजा । सोपसर्गं वो नक्षत्रम् । सर्वबन्धनमोक्षः क्रियतामिति ।

( ख ) तच्छ्रुत्वा देव्येरावतीचित्तं रक्षन्त्या राजा किल मोचयतीत्यहं संदिष्ट इति । ततो मुच्यत इति तया संपादितोऽर्थः ।

विगमे प्राप्तो निमित्तं कारणं एकान्तसाध्यं निःसन्देहेन संभवदुत्पातिकसाध्येन रूपमपि प्रयुज्यत इति प्रयोगः उपायस्तं सिद्ध्यै साध्यनिष्पादनाय संदिग्धमेव कार्यं स्यान्नवेति कृतसंदेहं मत्वा चेतः कातरं यथा तथा आगच्छते ॥ पुनर्मन्दस्य मे तस्मिन्प्रत्युत्पन्ना मतिः ॥ ( पुनर्मन्देनापि प्रत्युत्पन्नबुद्धिना मया कथितम् । उपसर्गेण ज्योतिषोक्तक्रूरग्रहवेधसूचितदैवोपद्रवेण सहितमित्यर्थः । ) । नहि बुद्धीत्यादि । ( सुहृदां बुद्धिगुणेनैव अर्थदर्शनं न किन्तु स्नेहेनैव सूक्ष्मः दुरवगाहनीयः कार्यसिद्धिपथः अभीष्टसिद्धे

( १ ) A. P. omit the speech and read the following in continuation with the above speech of विदूषक.
( २ ) T. भणिद and A. P. om. भणिदो मए. ( ३ ) B. G. A. P. omit the speech and read the following speech of विदूषक in continuation with the above. ( ४ ) A. उवरज्यन.

विदू०—तुवरदु भव। समुद्दघरए ससहिं[1] मालविअं ठाविअ भवन्तं पच्चुग्गदोह्मि। (क)

राजा—अहमेना सभावयामि। गच्छाग्रत।

विदू०—एदु भव। (परिक्रम्य।) इद समुद्दघरअं[2]। (ख)

राजा—(साशङ्कम्।) वयस्य एषा कुसुमावचयव्यग्रहस्ता सख्यास्ते इरावत्यां[3] परिचारिका चन्द्रिका समागच्छति[4]। इतस्तावदावां भित्तिगूढौ भवाव।

विदू०—कुम्भील्लएहिं कामुएहिं अ पडिहलणीआ खु चन्दिआ। (ग)

(उभौ यथोक्तं[5] कुरुत।)

*राजा—गौतम कथं नु ते सखी मां प्रतिपालयति। एहि। एनं गवाक्षमाश्रित्य विलोकयामि।*

विदू०—तह। (घ)

(उभौ[6] विलोकयन्तौ स्थितौ[7]।)

(ततः प्रविशति मालविका बकुलावलिका च।)

---

(क) त्वरतां भवान्। समुद्रगृहे ससखीं मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि।

(ख) एतु भवान्। इदं समुद्रगृहम्।

(ग) कुम्भीलकैः कामुकैश्च परिहरणीया खलु चन्द्रिका।

(घ) तथा।

---

रूपाय उपलभ्यते उद्भाव्यते इत्यर्थः)। सखी सहिता। अहो इत्यामन्त्रणे।

---

(1) B. G. N. T. सहीसहिदं. (2) B. G. T. गेहकं. (3) N. om. इरावत्याः. (4) B. G. N T. सन्निकृष्टमागच्छति. (5) B. G. N. T. add अहो. (6) A. om. (7) B. G. T. यथासमीहितं. (8) A. om. (9) N. तिष्ठत.

बकुल॰—सहि पणम भट्टारं। जो पस्सदो चिट्ठदो दीसदि। (क)

राजा—मन्ये प्रतिकृतिं मे दर्शयति।

माल॰—( सहर्षं ) णमो दे। ( द्वारमवलोक्य सविषादं। ) हला, मं विप्पलम्भेसि। (ख)

राजा—सखे हर्षविषादाभ्यामत्रभवत्याः प्रीतोऽस्मि।

सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य।
वदनेन सुवदनायास्ते समवस्थे क्षणादूढे ॥ ७ ॥

बकु॰—ण एसो चित्तगदो भट्टा। (ग)

उभे—( प्रणिपत्य। ) जेदु भट्टा। (घ)

---

(क) सखि प्रणम भर्तारम्। यो पार्श्वत. पृष्ठत. दृश्यते।

(ख) नमस्ते। सखि मां विप्रलम्भयसि।

(ग) नन्वेष चित्रगतो भर्ता।

(घ) जयतु भर्ता।

---

सूर्योदय इत्यादि। ( पुण्डरीकस्य पद्मस्य सूर्योदये यावस्था विकाशरूपा सूर्यास्तमये च या संकोचरूपावस्था भवति ते विकाशसंकोचात्मिके द्वे समवस्थे सुवदनाया मालविकाया वदनेन क्षणादूढे धृते )। सखि वदा

---

(१) Pn om. the sentence, and B. G. T. read it after णमो दे along with मालविका s speech. (२) B. G. N. T. om, and read after 'णमो दे।' " राजा—शङ्के मे प्रतिकृतिं निर्दिशति। (३) B. G. N. T. om (४) B. G. T. add जोरस्सदो ( T. add चिट्ठदि ) दस्साअदि, B G. N. T. मालविका—( सहर्षं द्वारमवलोक्य ) &c. (५) Pn Interchange. (६) B. G. N. T. om.

**माल॰**—हला तदा ससभम उक्कंठिआ अहं भट्टिणो रूवदंसणेण तह ण'वितिण्हह्मि जह अज्ज विभाविदो चित्तगद्‌दसणो भट्टा। ( क )

**विदू॰**—सुद भवदा। अत्तहोदी चित्ते जह दिठ्ठो भवं तह अदिठ्ठो त्ति मन्तेदि। मुधा दाणिं मञ्जुसा विअ रअणमण्ड जोव्वणगव्व वहोसि। ( ख )

**राजा**—सखे कुतूहलवानपि निसर्गशालीनः स्त्रीजनः। पश्य।

काल्स्न्येन निर्वर्णयितुं च रूप-
मिच्छन्ति तत्पूर्वसमागतानाम्।

---

( क ) सखि तदा ससम्भ्रममुत्कण्ठिता अहं भर्तृरूपदर्शनेन तथा न वितृष्णास्मि यथाद्य विभावितश्चित्रगतदर्शनो भर्ता।

( ख ) श्रुतं भवता। अत्रभवती चित्रे यथा दृष्टो भवांस्तथाऽदृष्ट इति मन्त्रयते। मुधेदानीं मञ्जुषेव रत्नभाण्ड यौवनगर्वं वहसि।

---

सम्भ्रमदृष्टे भर्तृरूपे यथा न वितृष्णास्मि तथाद्यापि मया भावितोऽवितृष्ण-दर्शनो भर्ता ( सखि ससम्भ्रमदृष्टे भर्तृरूपे यथा सतृष्णास्मि तथा अद्यापि मया न विभावितो वितृष्णदर्शनो भर्ता ) ॥ तत्रभवती चित्रे यथा दृष्टस्तथा दृष्टो भवानिति मन्त्रयते ( तत्रभवती चित्रे यथा दृष्टो न तथा दृष्टो भवान् इति मन्त्रयते )। **कार्त्स्न्येनेत्यादि**। ( प्रियेषु तद्दर्शनायेत्यर्थः।

---

( १ ) B. G. T. तदहिसमभेहिदा भट्टिणो रूवस्स ण तह वितिण्हह्मि जह अज्ज मए भाविदो अविदिण्हदसणो भट्टा.। Pn हला तदा समुहहिदा भट्टिणो रूवस्स ण तह वितिण्हह्मि जह अज्ज विभाविदो चित्तगदसणो भट्टा। Po हला तदा समुहट्ठीदा अह भट्टिणो रूवदसणेण तह ण वितिण्हह्मि जह अज्ज विभाविदो चित्तगदो एव्व भट्टा। N. हला तदा समभमट्ठिदे भट्टिणो रूवे जह ण वितिण्हह्मि तह अज्जवि मए भाविदो अवितिण्हदसणो भट्टा. ( २ ) P. सुद भवदा। अत्तहोदाए दिट्ठो जह चित्ते तह दि.ो भव त्ति मन्तिद। B G. T. सुद भवदा। ण किं अत्तहोदा तुए जह दि.ो तह ण दिट्ठो भव &c. N. सुद भवदा। अत्तहोदी चित्ते जह दिट्ठो तह दिट्ठो भव त्ति मन्ते दि।. ( ३ ) B. G. N. T. °समागममानाम.

न च प्रियेष्वायतलोचनानां
समग्रपात्राणि विलोचनानि ॥ ८ ॥

मालo—हला का एसा ईसिप्परिउत्तवअणा भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाईआदि । ( क )

बकुo—णं इअं पस्सगदा इरावदी । ( ख )

मालo—सहि अदक्खिणो विअ भट्टा मे पडिभादि । जो सव्वं देवीजणं उज्झिअ एक्काए मुहे बद्धलक्खो । ( ग )

बकुo—( आत्मगतम् ) चित्तगदं भट्टारं परमत्थदो गेण्हिअ असूएदि । होदु । कीलिस्सं दाव एदाए । ( प्रकाशम् । ) हला भट्टिणो वल्लहा एसा । ( घ )

मालo—तदो किं दाणिं अत्ताणं आआसेमि । (सासूयं परावर्तते ।)
( च )

---

( क ) सखि कैषा ईषत्परिवृत्तवदना भर्त्रा स्निग्धया दृष्ट्या निध्यायते।

( ख ) नन्वियं पार्श्वगतेरावती।

( ग ) सखि अदक्षिण इव भर्ता मे प्रतिभाति । यः सर्वं देवीजनमुज्झित्वैकस्या मुखे बद्धलक्ष्यः।

( घ ) चित्रगतं भर्तारं परमार्थतो गृहीत्वासूयति । भवतु । क्रीडिष्यामि तावदेतया । सखि भर्तुर्वल्लभैषा ।

( च ) ततः किमिदानीमात्मानमायासयिष्यामि ।

---

आयतलोचनानां व्यापारितनेत्राणां स्त्रीणामिति शेषः। [illegible]

---

( १ ) T. ननु, B G. ननु. ( २ ) B. G. [illegible], N. I. [illegible] ( ३ ) पार्श्वपरिवर्तितवदनेन. ( ४ ) B. G. T. I. interchange, [illegible] om. भर्ता. ( ५ ) P. परमत्थ. ( ६ ) B. G N. T. [illegible] P, A. om. ( ८ ) B. N. G. T. [illegible]

राजा—सखे पश्य ।

> भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं
> सासूयमाननमितः परिवर्तयन्त्या ।
> कान्तापराधकुपितेष्वनया[1] विनेतुः
> संदर्शितेव ललिताभिनयस्य शिक्षा ॥ ९ ॥

विदू०—अणुणअसज्जो दाणिं होहि । ( क )

माल०—अज्जगोदमो एत्थ एव्व सेवदि ण । ( पुनः स्थानान्तराभिमुखी भवितुमिच्छति । ) ( ख )

बकु०—( मालविका रुद्धा । ) ण खु कुविदा दाणिं तुमं । ( ग )

माल०—जइ चिरं कुविदं एव्वं मं[3] मण्णेसि एसो पच्चाणीअदि कोवो । ( घ )

---

( क ) अनुनयसज्ज इदानीं भव ।

( ख ) आर्यगौतमोऽत्रैव सेवते ननु ।

( ग ) न खलु कुपितेदानीं त्वम् ।

( घ ) यदि चिरं कुपितामेव मां मन्यसे एष प्रत्यानीयते कोपः ।

---

समागमाना स एव पूर्व० । तै. नेत्रैः पूर्व० ) समागमो येषां कृतप्रथमदर्शनानां प्रियाणामित्यर्थः । रूपं लावण्यं कात्स्न्येन समग्रवृत्त्या निर्वर्णयितुं द्रष्टुमिच्छन्ति सोत्सुकानि किंतु समग्रवृत्तीनि सपूर्णव्यापारवन्ति न भवन्तीति शेषः । इष्टविषयदर्शने औत्सुक्ये सत्यपि समग्रतया स्त्रियो न पश्यन्ति लज्जाशीलत्वादिति भावः । ) पार्श्वपरिवृत्तवदना । चित्रगतं भर्तारं परमार्थतः सकल्प्यासूयति । भ्रूभङ्गेत्यादि । ( विनेतुः शिक्षकस्य इति कर्तरिषष्ठी । कान्तापराधकुपितेषु कान्तस्य योऽपराधः अन्यस्त्रीसगमादिकृता

---

( १ ) B. G. विपक्षेष्वनया. ( २ ) B. G. T. पच्छा, N. एत्थ ण सेवदि. ( ३ ) P. A. om.

राजा—( उपेत्य । )

कुप्यसि कुवलयनयने चित्रार्पितचेष्टया किमेव मयि ।
ननु तव साक्षादयमहमनन्यसाधारणो दासः ॥ १० ॥

बकु०—जेदु भट्टा ( क )

माल०—( आत्मगतम् । ) कहं चित्तगदो भट्टा मए अनुइदो । ( व्रीडवदनमञ्जलिं करोति । ) ( ख )

( राजा मदनकातर्यं रूपयति । )

विदू०—किं भवं उदासीनो विअ । ( ग )

राजा—अविश्वसनीयत्वात्सख्यास्तव ।

विदू०—अत्तहोदीए अथं तुह अविस्सासो । ( घ )

राजा—श्रूयताम् ।

( क ) जयतु भर्ता ।

( ख ) कथं चित्रगतो भर्ता मयानुयितः ।

( ग ) किं भवानुदासीन इव ।

( घ ) अत्रभवत्यामयं तवाविश्वासः ।

पराधस्तत्र कुपितेषु नपुंसके भावे क्तः । ललिताभिनयस्य मनोहरस्य कोपव्यञ्जकचेष्टाविशेषस्य कर्मणि षष्ठी । शिक्षा उपदेशोऽनया मालविकया सदर्शितेव तत्र हेतुगर्भविशेषणं पूर्वार्धे ) । कुप्यसीत्यादि । ( चित्रार्पितचेष्टया किं कस्मात् कुप्यसि मह्यामिति शेषः । ननु अहं साक्षादनन्यसाधारण एकभक्तिकः इत्यर्थः तव दासः ) । भवत्यामयं तवावि-

( १ ) B. G. T. कथय किमिह मे & N. किमेवम्मे for किमेव मयि. P. A. किमेव मयि. ( २ ) N. ( इति सलज्जमञ्जलं &c. ), B. G. T. प्रकाश । सव्रीडवदन. ( ३ ) P. A. निरूपयति. ( ४ ) B. G. T. कह for अथ तुह; P. A. मा मम अत्तहोदीए तुह &c.

पथि नयनयोः स्थित्वा स्थित्वा तिरोभवति क्षणा॑
त्सरति सहसा बाह्वोर्मध्यं गतापि सखी तव।
मनसिजरुजा क्लिष्टस्येव समागममायया
कथमिव सखे विश्रब्धं स्यादिमां प्रति मे मनः॥ १२॥

बकु०—सहि बहुसो किल भट्टा विप्पलद्धो। दाणिं दाव अत्ता वि स्ससणिज्जो करीअदु। ( क )

माल०—सहि मह उण मन्दभग्गाए सिविणसमाअमो वि भट्टिणो दुल्लहो आसि। ( ख )

बकु०—भट्टा देहि से उत्तर। ( ग )

राजा—

उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम्।
तव सख्ये मया दत्तो न सेव्यः सेविता रहः॥ १२॥

---

( क ) सखि बहुशः किल भर्ता विप्रलब्धः। इदानीं तावदात्मा विश्वसनीयः क्रियताम्।

( ख ) सखि मम पुनर्मन्दभाग्यायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसात्।

( ग ) भर्ता देह्यस्या उत्तरम्।

---

श्वास। अस्मिन्वाक्ये काकुरनुसंधेया। पथि नयनयोरित्यादि। उ
त्करूपेण बहुशः प्रतारणेन अविश्वासकारणाचरणादिमां मालविकां प्रति मे
मनः कथं विश्रब्धं विश्वस्तं स्यादपि तु कथमपि न। प्रतारिकाया प्रतारणा
वश्यं भावेन तत्राविश्वासस्यैव युक्तत्वादिति भावः। उत्तरेणेत्यादि।

---

( १ ) P A स्वम० ( २ ) P A B G अबला सती ( ३ ) B G T कथमपि ( ४ ) N विस्रब्ध ( ५ ) B G. T ता for दाणं दाव Po दाव एथ &c A दावअथ &c ( ६ ) B G T add एदु ( ७ ) N कहिं

बकु०—अणुगहीदह्मि । (क)

विदू०—( परिक्रम्य । ससंभ्रमम् । ) वउलावलिए एसो बालासोअरुक्खस्स पल्लवाइं लङ्घेदि हरिणो । एहि णिवारेम णं । (ख)

बकु०—तह । ( इति प्रस्थिता । ) (ग)

राजा—वयस्य एवमेवास्मिन्रक्षणेऽवहितेन त्वया भवितव्यम् ।

विदू०—एव्वं वि गोदमो संदिस्सीअदि । (घ)

बकु०—अज्ज गोदम अहं अप्पआसे चिट्ठामि । तुमं दुवाररक्खओ होहि । (च)

विदू०—जुज्जइ । (छ)

---

(क) अनुगृहीताः स्मः ।

(ख) बकुलावलिके एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति हरिणः । एहि निवारयाम एनम् ।

(ग) तथा ।

(घ) एवमपि गौतमः संदिश्यते ।

(च) आर्य गौतम अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव ।

(छ) युज्यते ।

---

[ उत्तरेण किं उत्तरसाध्यं नास्ति । पंचबाण एवाभिस्तापकत्वात् साक्षी यत्र तद्यथा तया अनेनाभिसाक्षिकत्वेन दुर्भेद्यता दर्शिता । मया इदानीं

---

(१) N. om. (२) B. G. T. असोअरुक्खाइँ. (३) P. A. लंघेदि आअच्छेदि, B. G. T. अदि लंघेदि इच्छेदि. (४) N. om., P. A. ता एहि. (५) omit this and the two following speeches. (६) A. P. om. (७) B. G. N. T. एवमस्मिन्रक्षणरक्षणे &c. B. G. T. एवमेवास्मिन्रक्षणेऽप्यवहितेन &c. (८) P. एव्व वि. (९) P. A. add ण (ननु). (१०) B. G. T. णिदिस्सअदि. (११) N. add परिक्रम्य. (१२) दुवाररक्खा.

( निष्क्रान्ता बकुलावलिका । )

विदू०—इम दाव फलिहत्थल[1] अस्सिदो[2] होमि । ( इति तथा कृत्वा । ) अहो सुहप्फरिसदा सिलाविसेसस्स । ( इति निद्रायते । ) ( क )

( मालविका ससाध्वस[3] तिष्ठति । )

राजा—

विसृज सुन्दरि संगमसाध्वसं
तव[4] चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥ १३ ॥

माल०—देवीए[5] भएण अत्तणो वि[6] पिअ कादु ण पारेमि । ( ख )

राजा—अयि[7] न भेतव्यम्[8] ।

माल०—( सोपालम्भम्[9] । ) जो ण भाएदि सो मए भट्टिणीदसणे दिट्ठसमवत्थो[10] भट्टा । ( ग )

---

( क ) इम तावत्स्फटिकस्थलमाश्रितो भवामि । अहो सुखस्पर्शता शिलाविशेषस्य ।

( ख ) देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि ।

( ग ) यो न बिभेति स मया भट्टिनीदर्शने दृष्टसमवस्थो भर्ता ।

---

आत्मा तव सख्यै दत्त. । रहसि निर्जनेऽस्या सेविता सेवक एव भविष्यामि न तु सेव्य इत्यर्थ । ] विसृजेत्यादि । [ चिरात्प्रभृति बहुकालावधि तव प्रणयोन्मुखे प्रणयसमुत्सुके सहकारिता सहचारितामाम्रवृक्षत्वञ्च गते मयि त्वमतिमुक्तलताचरितं माधवीलतासादृश्य बन्धनाश्लेषेणेति शेष परिगृ

---

(१) B. G. T. °त्थम्भ N क्खम्भम् (२) B. G. T. सस्सिदो. (३) N. ससाध्वसा, A. साध्वस (४) P. A ननु (५) B. G I. देवी भआदो. (६) Pu om. अवि. (७) B. G T. om (८) A. P 1epert. (९) P A. om (१०) N. T. °समत्थो (°सामर्थ्यो ), B. G. °समावत्थो, A. दिट्ठो समवत्थो

राजा—

दाक्षिण्यं नाम बिम्बोष्ठि वैम्बिकानां[1] कुलव्रतम् ।
तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः ॥ १४ ॥

तदनुगृह्यतां चिरानुरक्तोऽयं[2] जनः । ( इति संश्लेषमुपनयति[3] । )

( मालविका नाट्येन[4] परिहरति । )

राजा—( आत्मगतम् । ) रमणीयः खलु नवाङ्गनानां मदनविषयव्यापारः । तथा हि ।

हस्तं कम्पवती[5] रुणद्धि रशनाव्यापारलोलाङ्गुलिं[6]
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ १५ ॥

( ततः प्रविशतीरावती निपुणिका च । )

इरा०—हञ्जे णिउणिए सच्चं तुमं[10] परिगदत्था चन्दिआए ।
समुद्दघरअलिन्दए[11] सहदो एआई अज्जगोदमो दिट्ठो त्ति । ( क )

---

( क ) हञ्जे निपुणिके सत्यं त्व परिगतार्था चन्द्रिकया । समुद्रगृहालिन्दे शयित एकाक्यार्यगौतमो दृष्ट इति ।

---

हाण । दाक्षिण्यमित्यादि । [ हे बिम्बोष्ठि । नाम सम्भावनायां प्रकाश्ये वा । दाक्षिण्य सर्वदयितास्वानुकूल्यं नायकानां कुलव्रतमवश्यपालनीयो नियमः । यद्यपीति शेषः तत् तथापि ये मे प्राणास्ते त्वदाशानिबन्धनास्त्वदाकांक्षा परवशा इत्यर्थः । ] वैम्बिकास्तद्वश्या राजानः ॥ हस्तमित्यादि ।

---

( १ ) B. G. T. नायकानान्. ( २ ) °अनुरक्तहृदयो &c. ( ३ ) P. A. अभिनयति, (उपनयति); ( ४ ) N. om. ( ५ ) B. G. N. T. A. °अवनार. ( ६ ) B. G. N. T. कम्पयते. ( ७ ) B. G. T. °अगुलिं , N. अगुली. ( ८ ) P. Interchange. ( ९ ) P. A. °चक्षु . ( १० ) P. A. तुह चन्दिआए सदिह समुद &c. ( ११ ) N. अलिन्दघरहे, B. G. T. कालिन्द सहदो. ( १२ ) B. G. T. om. एआइ.

**निपु०**—अण्णहा कहं भट्टिणीए विण्णावेमि[1]। ( क )

**इरा०**—तेण हि तहिं एव्व गच्छामो। संसआदो मुत्तं[2] अज्जउत्तस्सै पिअवअस्सं पुच्छिदुं अ। ( ख )

**निपु०**—सावसेसं विअ भट्टिणीए वअणं। ( ग )

**इरा०**—अण्णं अ[3] चित्तगदं अज्जउत्तं[4] पसादेदुं। ( घ )

**निपु०**—अह कहं दाणिं भट्टा एव्व ण प्पसादीअदि। ( च )

**इरा०**—मुद्धे जारिसो चित्तगदो णं तारिसो एव्व अण्णसकन्तहिअओ अज्जउत्तो। केवलं उअआरादिक्कमं पमज्जिदुं अअं आरम्भो। ( छ )

---

( क ) अन्यथा कथं भट्टिन्यै विज्ञापयामि।

( ख ) तेन हि तत्रैव गच्छामः। संशयान्मुक्तं आर्यपुत्रस्य प्रियवयस्यं प्रष्टुं च।

( ग ) सावशेषमिव भट्टिन्या वचनम्।

( घ ) अन्यच्च चित्रगतमार्यपुत्रं प्रसादयितुम्।

( च ) अथ कथमिदानीं भर्तैव न प्रसाद्यते।

( छ ) मुग्धे यादृशश्चित्रगतो ननु तादृश एवान्यसंक्रान्तहृदय आर्यपुत्रः। केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः।

---

[ रशनाव्यापारलोलांगुलि रशनायां व्यापारे तद्ग्रन्थिमोचनरूपचेष्टायां

---

( १ ) Po कि अण्णहा, A. कि अलीअ, ( २ ) P. B. G. T. विण्णावीअदि, A. विण्णविद. ( ३ ) Po A. णिमुत्त. ( ४ ) B G. N. T. om. ( ५ ) P. A. take अ last. ( ६ ) Pn महार, ( ७ ) N. om. भट्टा, B. G. T. णु महा एव्व अणु° &c. ( ८ ) B. G. T. अणुणीअदि, P. A. कि ण ( A. om ण ) पच्चणुणीअदि. ( ९ ) B, G, T. A. P. om. ( १० ) P. A. अह्माण.

**निपु०**—इदो ईदो भट्टिणी । ( क )

( उभे परिक्रामत । )

( प्रविश्य )

**चेटी**—जेदु भट्टिणी । देवी भणादि । णं मे एसो मच्छरस्स कालो । तुह क्खु बहुमाण वड्ढेदु वअस्सिआए सह णिअलबन्धणे किदा मालविआ । जइ अणुमण्णेसि अज्जउत्तं वि तुहकिदे विण्णावइस्सं । जं तुह इच्छिदं तं मे भणाहि त्ति । ( ख )

**इरा०**—णाअरिए विण्णवेहि देविं । का वअ भट्टिणि णिओजेदुं । परिअणणिअलणेण दंसिदो मइ अणुग्गहो । कस्स वा अण्णस्स पसादेण अअं जणो वड्ढदि त्ति । ( ग )

**चेटि**—तह । ( इति निष्क्रान्ता । ) ( घ )

---

( क ) इत इतो भट्टिनी ।

( ख ) जयतु भट्टिनी । देवी भणति । न मे एष मत्सरस्य कालः । तव खलु बहुमानं वर्धयितुं वयस्यया सह निगडबन्धने कृता मालविका । यद्यनुमन्यसे आर्यपुत्रमपि तव कृते विज्ञापयिष्यामि । यत्तवेष्टं तन्मे भणेति ।

( ग ) नागरिके विज्ञापय देवीम् । का वयं भट्टिनीं नियोजयितुम् । परिजननिगडनेन दर्शितो मय्यनुग्रहः । कस्य वान्यस्य प्रसादेनायं जनो वर्धत इति ।

( घ ) तथा ।

---

समुत्सुकत्वेन व्यग्राङ्गुलीयस्य तं हस्तं रुणद्धि रोद्धुं गृह्णाति । बलाद्धठेनाङ्कि

---

( १ ) P. A. om. one इदो. ( २ ) P. A. इति. ( ३ ) B. G. T. ण मे एसो मस्सरस्स वालो तव बहुमाण वड्ढेदु &c, N. मस्सरस्स एसो &c. ( ४ ) N. तेण. ( ५ ) B. G. T. A. Po. om. ( ६ ) N. Po अज्जउत्तस्स विअ वादु तह करमि ( ७ ) B. G. T omit the sentence. ( ८ ) P. om. मे. ( ९ ) Po. A भणिणी. ( १० ) P. A. णिम्मदेण. ( ११ ) B. G. N. T. om. ( १२ ) Po. A. add भणादि.

**निपु०**—( परिक्रम्यावलोक्य च । ) भट्टिणि एसो दुवारदेसे[1] समुद्दघर अस्स विपणिगदो विअ बलीवद्दो[2] अज्जगोदमो आसीणो एव्व णिद्दाअदि ( क )

**इरा०**—अच्चाहिदं[3] । ण क्खु सावसेसविसविआरो भवे[4] । ( ख )

**निपु०**—पसण्णमुहवण्णो[5] दीसइ । अवि अ धुवसिद्धिणा चिइ च्छि दो । ता से असङ्कणिज्जं पावं ( ग )

**विदू०**—( उत्स्वप्नायते ) भोदि मालविए । ( घ )

**निपु०**—सुदं भट्टिणीए । कस्स एसो अत्तणिओअसंपादणे विस्स सणिज्जो हदासो । सव्वकालं इदो एव्व सोत्थिवाअणमोदएहिं कुच्छि पूरिअ संपदं मालविअं सिविणावेदि । ( च )

---

( क ) भट्टिनि एष द्वारदेशे समुद्रगृहस्य विपणिगत इव बलीवर्द आर्य गौतम आसीन एव निद्रायते ।

( ख ) अत्याहितम् । न खलु सावशेषविषविकारो भवेत् ।

( ग ) प्रसन्नमुखवर्णो दृश्यते । अपि च ध्रुवसिद्धिना चिकित्सितः । तदस्याशङ्कनीयं पापम् ।

( घ ) भवति मालविके ।

( च ) श्रुतं भट्टिन्या । कस्यैष आत्मनियोगसंपादने विश्वसनीयो हताशः । सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा सांप्रतं मालविकां स्वप्नायते ।

---

गम्यमाना स्त्री हस्तौ स्तनावरणतां स्तनावरकत्वं नयति । पक्ष्मलनत्रमानन

---

(१) B G T दुवारे A. P दुवारोच्छङ्गे N दुवारदेसे (२) B G T A वुसहो and A P add विस्सद्धो (३) B. G T किं णु क्खु अच्चाहिदं । सावसेसो विअ विस° &c (४) N सावसेसो &c (५) A विसो & Po विसवेओ (६) A P पसण्णमुहो (७) Pn अत्तणाणो हदासो । सव्वकालं &c Po A अत्तणीणो अब्भवहारसवादापेक्खी ( A adds कितवो ) इदासो आदरिओ इदो ( Po सक्कारं ) ( for सव्वकालं ) &c T B G अत्तणाणो ( T add एस कितवो ) अब्भवहारि अ ( B G add सदावे अ ) विदग्धो ( B G. add सक्कामो ) इदो &c

विदू०—इरावदिं अदिक्कमन्दी होहि । ( क )

निपु०—सुदं अच्चाहिदं । इमं भुअङ्गभीरुअं बह्मबन्धुं इमिणा भुअङ्गकुडिलेण दण्डकट्ठेण त्थम्भन्तरिदा भाअइस्सं । ( ख )

इरा०—अरुहदि एव्वं किदग्घो उवद्दवस्स । ( ग )

( निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति । )

विदू०—( सहसा प्रबुद्धय । ) अविहा अविहा । भो दव्वीकरो मे उवरि पडिदो । ( घ )

राजा—( सहसोपसृत्य । ) सखे न भेतव्यं न भेतव्यम् ।

---

( क ) इरावतीमतिक्रामन्ती भव ।

( ख ) श्रुतमत्याहितम् । इमं भुजंगभीरुकं ब्रह्मबन्धुमनेन भुजंगकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भीषयिष्यामि ।

( ग ) अर्हत्येव कृतघ्न उपद्रवस्य ।

( घ ) अविधा अविधा । भो दर्वीकरो म उपरि पतितः ।

---

पातुं चुंबयितुमुन्नमयत उत्तोलयतो साचीकरोति वक्त्रं स्थापयति । अतो व्याजेन छलेन ममाभिलापपूरणसुखं अभिलाषस्य पूरणेन यत्सुखं तन्निर्वर्तयति निष्पादयत्येव ॥ ) हञ्जे निपुणिके सत्यं त्वं परिगतार्था चंद्रिकायाम् । अत्याहितं नाम जीवानपेक्षि कर्म । 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ' इत्यमरसिंहः । अत्र दोषोद्घाटनादपवादो नाम संध्यङ्गमुक्तं भवति । अत्रैव रोषभाषणात्संफेटोनाम संध्यङ्गमुक्तं भवति । दण्डकाष्ठेन स्तम्भान्तरिता भीषयिष्यामि । ' उवद्दवस्स ' इत्यत्र क्वचित् अपादेः इति प्राकृते कर्मणि षष्ठी । अवत अवत । अत्रोद्वेजनाद्युक्तिर्नाम संध्यङ्गमुक्तं भ-

---

( १ ) B. G. N. T. P. एदं. ( २ ) B. G. T. P. A. om. (३) B. G. T. add अत्तणो. ( ४ ) B. G. T. om. A. क्खि. ( ५ ) Po A. विदग्धो. ( ६ ) B. G. T. om. and N. add कअस्स. ( ७ ) N. सप्पो. ( ८ ) B. G. T. om.

**माल०**—( अनुसृत्य । ) भट्टा मा दाव सहसा णिक्कमे । सप्पो त्ति भणीअदि । ( क )

**इरा०**—हद्धि हद्धि । भट्टा इदो एव्व धावदि । ( ख )

**विदू०**—( सप्रहासम् । ) कह दण्डकट्ठ एद । अह उण जाणे ज मए केदईकण्टएहिं दस करिअ सप्पस्स विअ दसो किदो त मे फलिद त्ति । ( ग )

( प्रविश्य पटाक्षेपेण । )

**वकुला०**—मा दाव भट्टा पविसदु । इहं कुडिलगई सप्पो विअ दीसदी । ( घ )

**इरा०**—( राजानमुपसृत्य । ) अवि णिव्विग्घमणोरहो दिवासकेदो मिहुणस्स । ( च )

---

( क ) भर्त मा तावत्सहसा निष्क्राम । सर्प इति भण्यते ।

( ख ) हा धिक् हा धिक् । भर्ता इत एव धावति ।

( ग ) कथ दण्डकाष्ठमेतत् । अह पुनर्जाने यन्मया केतकीकण्टकैर्दंश कृत्वा सर्पस्येव दश कृतस्तन्मे फलितमिति ।

( घ ) मा तावद्भर्ता प्रविशतु । इह कुटिलगति सर्प इव दृश्यते ।

( च ) अपि निर्विघ्नमनोरथो दिवासकेतो मिथुनस्य ।

---

वति । भर्त मा तावत्सहसोपसर्प । प्रसीदतु भट्टिनी । किं नु खलु दर्दुर

---

( १ ) B. G. T णिक्कमिस्ससि ( T as an alternative णिक्कमदु भट्टा ) ( २ ) B. G. T. A P भणादि. ( ३ ) Po A om. दंस करिअ, N. सप्पस्स उवरि अअसो किद, B G T. सप्पस्स ( T. alternative सप्पदसो ) अअसो किद. ( ४ ) N. om. ( ५ ) P. A. add ससम्भ्रमम ( ६ ) B. G. I क्खु. ( ७ ) B A वहिं सप्पो । मा क्खु पविस, ( मा क्खु मा क्खु भट्टा विससि अ. ( ८ ) N. om. ( ९ ) N. सम्भ्रमतरिता राजानमु पेत्य ( १० ) B. G. T add सहसा after राजानम ( ११ ) Po A. अवि सिग्ग मणोरहा दिवा सकेद्मिहुणस्स.

